धं

ॐ श्रीगणेशाय नमः देव्युवाच भगवन्सर्ववेत्तात्वं
देवानांप्रीतिकारकः मंत्रिणांदेहरक्षार्थंकारणंकथ्यतां
ध्रुवं १ यक्षिप्रातिसाधकाः येनहिनाशमशानन्[?]मिवु
रणेषुघातिघोरेषुमहाकायुभयेषुच २ अंगिसलि
लवृक्षेषुश्चशारिव्याधिवह्निषु भैरवंकवचंब्रूहि
यदिचास्तिकृपामयि ३ प्राणत्यागंकरिष्यामि
यदिनोकथयिष्यासि सत्यंसत्यंपुनः सत्यंसत्यमेवनसं
शयः ४ इत्थंदेव्याः वचः श्रुत्वाबृहस्पतिरिवापरः
उवाचवचनंतत्रदेवदेवोमहेश्वरः ५ महेश्वरउवाच
वदंकवचंदिव्यंश्रृणुसम्प्राणवल्लभे चंडिका

१ तंत्र सर्वस्वं च पुस्तकस्य विशेषतः ६ तंत्रमंत्रादरं चैव वाग्दे
वस्य रूपकं शंखवर्णो द्विबाहुर्वै वटुकः रुद्रशेखरः ७
आपदुद्धारणो नाम भैरवः परिकीर्तितः प्रवक्ष्यामि समासे
न चतुर्वर्गस्य सिद्धये ८ प्रणवं कामदं विद्या लज्जा बीजं च
सिद्धिदं वटुकायेति विज्ञेयं महापातिकनाशनं ९ आ
पदुद्धारणायेति स्यादापदुद्धारकं नृणां कुरुद्वयं महेशा
नि मोहनं परिकीर्तितं १० वटुकायेति विज्ञेयं स्तंभनं परि
कीर्तितं लज्जा बीजं तथा विद्या न्मुक्तिदं परिकीर्तितं ११
द्वाविंशाक्षरो मंत्रः क्रमेण जगदीश्वरि गोपनीयः प्र
यत्नेन मातृजारोपरोपया १२ ॐ ह्रीं वं ह्रीं आपदु

द्धारक बटुकभैरवकवचस्य आनंदभैरव ऋषिरनुष्टुप्छंदः
श्री आपदुद्धारक बटुकभैरवो देवता बंबीजं ह्रींशक्तिः स्व
हा कीलकं श्रीबटुकभैरवप्रीत्यर्थे पाठे विनियोगः
ध्यानं करकलितकपालः कुण्डली दंडपाणिस्तरु
णतिमिरनीलो व्यालयज्ञोपवीती क्रतुसमयसपर्या
विघ्नविछेदहेतुर्जयति बटुकनाथः सिद्धिदः साधका
नां। ॐ पातु नित्यं शिरसि पातु ह्रीं कंठदेशके बटुका
य पातु हृदये नाभौ आपदुद्धारणाय च १४ ॐ कुरु द्वयं लिं
गमूले आधारे बटुकाय च सर्वदा पातु ह्रींबीजं बाह्वोर्युग
लमेव च १५ षडंगसहितो देवो नित्यं रक्षतु भैरवः ॐ

२

ह्रीं बटुकाय मन्तं तं सर्वांगे मम सर्वदा १६ ओं ह्रीं कालाय पा
दयोः पातु पातु वीरासनः हृदि ओं ह्रीं महाकालः शिरः पा
तु कंठ देशेत भैरवः १७ ओं ह्रीं दंडपाणिर्गुह्यमूले भैर
वीसहितस्सदा ओं ह्रीं लेलिह भैरवः पातु ब्रह्माणी शा
क्तिभिः सह १८ पूर्वस्यामसितांगो मे दिशि रक्षतु सर्व
दा आग्नेयां रुरुः पातु दक्षिणे चंडभैरवः १९ नैरृत्यां
क्रोधनः पातु उन्मत्तः पातु पश्चिमे वायव्यां मे कपाली च
नित्यं पायात्सुरेश्वरः २० भीषणो भैरवः पातु उत्तर
स्यां तु सर्वदा संहार भैरवः पायादीशान्यां च महेश्वरः २१
ऊर्ध्वं पातु विधाता वै पाताले नंतको विभुः सद्योजात

स्तु मां पायात्पूर्वतो देवसेवितः २२ वामदेवोवतु प्रापरतो
घोरे सदावतु जलेतत्पुरुषः पातु स्थले पातु अघोरकः २३
ईशानश्चान्तरिक्षे मे सदा पातु महेश्वरः डाकिनीपुत्रकः
पातु श्मशाने मे सर्वदावतु २४ हाकिनीपुत्रकः पातु दारांस्तु
लाकिनीसुतः पातु शाकिनिकापुत्रः स्त्रियं मे सततं शिरः २५
मालिनीपुत्रकः पातु पशूनश्वान्गजांस्तथा महाकाली
वतु क्षेत्रं मे कालभैरवः २६ बाघंवायुप्रियः पातु भैर
वो भीतिहारकः सहस्रारे महापद्मे कर्पूरधवलो गुरुः २७
हंसबीजं सदा पातु लोहरंतातु सर्वदा प्राणापानौ समानं च
उदानं व्यानमेव च २८ नागं कूर्मं कृकलं चैव देवदत्तं धनंजय

पंचभूतेषु सर्वेषु बंधुवेशः सदावतु २९ इतीदं कवचं महे
शानि तव स्नेहात्प्रकाशितं चतुर्वर्गप्रदं देवि नित्यं मे
रवत्सप्रकीर्तितं ३ वांछितार्थप्रदं चैव स्वयं देवप्रका
शितं यः पठेच्छृणुयाद्वापि धारयेत्कवचोत्तमं ३१
सदानंदमयो भूत्वा लभते परमं पदं पश्चेत्तु चिंतयेद्दे
विकवचं मन्त्रस्वोदितं ३२ कोटिजन्मार्जितं पापं वि
नश्यति वतात्क्षणात् जलमध्येग्निमध्ये वा दुर्जये
3 शत्रुसंकटे ३३ मत्ताकारागृहे वद्धो लोहशृंखलयान्वि
तः मुच्यते तात्क्षणा देवि सर्वत्र विजयी भवेत् ३४ भ
क्तेन मनसा कवचं प्रजपेद्यदि कामतुल्यः स नारी

४

प्रत्यक्षो जायते तस्य भैरवो वहुरूपकः स्वयं ४१ जिह्वाकोटिसहस्रैस्तु वक्त्रकोटिशतैरपि वक्तुं स्यां न शक्यं दे
वि वर्णितुं शाक्यते मया ४२ इदं कवचम् अज्ञात्वा यो जपेद्वटुकं नरः स नाप्नोति फलं तस्य परे च नरकं व्रजेत् ४३ मन्त्वं तरवर्षं स्थित्वा तिर्यग्योनिषु जायते
इह लोके महारोगी दरिद्रो व्याधिपीडितः ४४ शत्रूणां वशगो भूत्वा करपात्री भवेन्नरः न देयं मर्त्यलोकेषु स्तवं भक्ताय मिदं प्रिये ४५ न देयं पराशिष्येभ्यो दुर्जनेभ्यः सुरेश्वरि निंदकेभ्यः ऽशिष्येभ्यो दांभिकेभ्यो न सर्वदा ४६ देयं श्रुत्वा यशी व्याप

शांतायप्रियवादिने कार्पण्यपरहितायालंवदु
केभक्तिरतायच ४७ योपरीक्ष्यप्रदातावै तस्य
नश्यंति सत्वरं आयुर्विद्यायशोधर्मं वलं चैव न
संशयः ४८ तस्माद्वर्णविभागेन दूर्वांशीसंप
रीक्षयेत् एकद्वित्रिचतुर्वर्णैः पश्चाद्द्यान्मन्त्र
मं ४९ इति श्री वटुकभैरवकवचपाठः ==
मत्समो नैव पापात्मा त्वत्समो नैव पापहृः इति
संचिंत्य संचिंत्य यथेच्छसि तथा कुरु १

